CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

श्रीगणेशाय नमः।

# अथ आदिवाराहीपद्धतिः प्रारभ्यते।

तत्रादौ रजनीतुरीययामे साधको विबुद्धय हस्तौ पादौ प्रक्षालयेत्। तत आचमनम्। धौतवाससी परिधाय, स्वासने प्रविश्य, वराभयकरं स्वशक्त्यङ्कितवामाङ्गं निजगुरुं स्मरेत्। तद्यथा—सहस्रदलपुष्करे तुहिनरश्मिबिम्बोदरे स्वरान्तरकथादिभिः। प्रकर्षेण सहस्रदलकमलान्तरे वराभयकरं गुरुं धृतसुग-

CC-0. Mumukshu Bhawan Varanasi Collection. New Delhi. Digitized by eGangotri

न्धमाल्याम्बरं स्मरेच्छिरसि भास्करं तुहिनरक्तशक्त्याकुलम् ॥ इति ध्यात्वा । आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजबोधयुक्तम् । योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं तन्तु सदा भजामि ॥ इत्युक्त्वा तत्पादुकामन्त्रं जप्त्वा पादुकास्तोत्रं जपेत् । तद्यथा—हेरम्बं क्षेत्रपालं च योगीशं बटुकं तथा । श्रीगुरुं नाथमानन्दभैरवं भैरवीपरम् ॥ प्रणम्य संविन्मार्गस्य नागेभज्ञानहागुरून् । प्रायश्चित्तं प्रवक्ष्यामि सर्वतन्त्राविरोधतः । साधकानां च पुत्राणां दीक्षितानां कुलागमे ॥ १ ॥ योगिनीवीरमालाये प्रमादः सुलभः खलु । मनसश्चञ्चलत्वाच्च सत्त्वहीनात्तथापि

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

च ॥ कामिनीनां च संसर्गात् सत्त्वहीनाश्चकार सः । प्रायश्चित्तविहीनस्य फलं भोगाय केवलम् ॥ सर्वसाक्षी महादेवो नरकानसृजत्प्रभुः । तस्मात् सर्वप्रयत्नेन प्रायश्चित्तमिहैव तु ॥ कृतस्य कर्मणः कुर्यादनुतापो भवेद्यदि । प्राग्जन्मादिमहादोषप्रविलापनकारणम् ॥ प्रायश्चित्तं परं सत्यं श्रीगुरोः पादुकास्मृतिः । यस्य श्रीपादरजसा रञ्जते मस्तके शिवः ॥ रमते सह पार्वत्या तस्य श्रीपादुकास्मृतिः ॥ यो मोहतमसाक्रान्तमुद्धरत्यन्धकूपतः । किं बालं कृपया नाथ तस्य श्रीपादुकास्मृतिः ॥ यस्य त्रैलोक्यमखिलं सच्चिदानन्दलक्षणम् । पूर्यते स्वगुणैः शक्त्या तस्य श्री० ॥

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

यस्य त्रैलोक्यमखिलं वशे तिष्ठत्यशेषतः । स्वदृष्टिपातमात्रेण तस्य श्रीपा०॥ यस्मिन् सर्वस्वमात्मानमप्येकीकृत्य भक्तितः । समर्पयन्ति तच्छिष्याः तस्य श्री० ॥ यस्मिन् सृष्टिस्थितिध्वंसविग्रहानुग्रहात्मकम् । प्रकाशकं पंचकृत्येयं तस्य श्री० ॥ मूले हृदि ललाटे च द्वादश्यान्ते चरेत शिवः । यस्याज्ञां पादुकाहस्ते तस्य श्री० ॥ अत्यन्तदृढभेद्यस्य पशुपाशविमोचनम् । यमाहुः शाम्भवीवाचः तस्य श्रीर्यस्य पादुकाम् ॥ यः सिंधुः पादयोः कूल-पर्वतद्रुमयोरपि । गुल्फे नक्षत्रवृन्दानि तस्य श्रीमत्पदाम्बुजे ॥ वनस्पतीस्तथा रोम्णि शतरुद्राश्च जंघयोः । जान्वोश्च क्षेत्रसन्दोहा तस्य श्री० ॥

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

इडापिङ्गलयोरन्तपादद्वन्दं च मस्तके। गंगा च यमुना चैव मध्ये तस्य सरस्वती॥ शुक्लाक्तपदद्वन्द्वं मस्तके यस्य राजते। शाम्भवं च तयोर्मध्ये तस्य श्रीपा०॥ गुरुः शिवो गुरुर्विष्णुर्गुरुर्ब्रह्मा गुरुः परः। गुरुरग्निर्गुरुर्मन्त्रो भानुश्चिन्द्रस्तथैव च॥ अन्यत्सर्वं सप्रपञ्चं निष्प्रपञ्चा गुरोः स्मृतिः॥ तस्माच्छ्रीपादुकाध्यानं सर्वपापनिकृन्तनम्। पालनाद् दुरितच्छेदात्कामितार्थप्रपूरणात्॥ १॥ पादुकामन्त्रशब्दार्थविमर्दान्मूर्ध्नि पूजयेत्। इति शास्त्रार्थसंकेत-रहस्यं कुलशासने ॥ २॥ शतपुल्लासवशादुक्तमस्माभिर्गुर्वनुग्रहात्। श्रीगुरोः पादुकास्तोत्रं प्रातरुत्थाय यः पठेत्। नश्यन्ति सर्वपा-

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पानि वह्निना तूलराशिवत् ॥ पठितव्यं प्रयत्नेन स्तोतव्यं भक्तिशालिभिः । भोगमोक्षार्थिभिस्तस्मात्सद्भिरागमपारगैः ॥ काशीक्षेत्रं निवासस्तव चरणजलं जाह्नवी श्रीगुरोर्नः । साक्षाद्विश्वेश्वरस्त्वं तव च सुनतया तारकब्रह्मबोधः ॥ त्वच्छ्रीपादांकिताभूरिह भवति गया त्वत्प्रसंगः प्रयागः । त्वत्तोन्यत्तीर्थदेवं क्वचिदपि च परं न प्रतीमः पृथिव्याम् ॥ इति गुरुस्तोत्रम् ॥ अथ पूजाविधिं वक्ष्ये सर्वसौभाग्यदायिनम् । ब्राह्मे मुहूर्ते उत्थाय स्वशिरसि प्रातः शिरसेत्यादिना गुरुं ध्यात्वा मानसोपचारैराराध्य 'गुरुभ्यो नमः' इति नमस्कृत्य देवीं ध्यायेत् । कुण्डलि-

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

नीं सुषुम्णां वर्तमानां षट्चक्रभेदक्रमेण परमशिवे ऐक्यं विभाव्य, मनसा आराध्य, मूलादिब्रह्मरन्ध्रान्तं विसृज्य, यथाशक्त्या गायत्रीं जपेत् । ततः सुवर्णादिपीठेन रक्तचंदनकुंकुमादिना यंत्रं लिखित्वा, अग्रे पीठोपरि स्थापयेत् । यथा—चतुर्द्वारं भूपुरवृत्तं अष्टदलपद्मं विलिख्य, तन्मध्ये भानुमण्डलं सत्त्वरजस्तमोपहं रेखायुतं त्रिकोणं विलिख्य, त्रिकोण-रेखासु त्रिद्वारयुक्तं योनिमंडलं विलिख्य, त्रिकोणमध्ये हुं हुं फट्कारं च लिखेत् ॥ इति यंत्रम् ॥ यंत्रं लिखित्वा यथोक्तपीठे संस्थाप्य । वामे गुरुभ्यो नमः । दक्षिणे गणे-

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

शाय नमः । मध्ये वाराहीति नमः । इति नमस्कृत्य, वाराहीपूजोक्तप्रकारेण भूतशुद्धिं कुर्यात् । इति श्लोकत्रयं पठेत् । समुद्र-मेखले देवि पर्वतस्तनमस्तके । विष्णुपत्नि नमस्तुभ्यं त्राहि मां परमेश्वरि ॥ भूमिं संप्रार्थ्य मैत्रादिकं कर्म विधाय स्नानं कुर्यात् । ततः परं ब्रह्मरन्ध्रं प्राणायामं भूतशुद्धिं प्राणप्रतिष्ठामातृकादिन्यासं कलात्मिकान्यासं च कुर्यात् ।

ॐ अस्य श्रीक्रोडवाराहीमंत्रस्य श्रीशिव ऋषिः, जगतीच्छन्दः, क्रोडवाराही देवता, अभीष्टसिद्ध्यर्थे जपे विनियोगः । शिरसि शिवऋषये नमः । मुखे जगतीछंदसे नमः । हृदि क्रोडवा-

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

राह्यै नमः । सर्वाङ्गे अभीष्टसिद्ध्यर्थे जपे विनियोगाय नमः । अथ ऋष्यादिन्यासं मातृकान्यासं च । ततः कनिष्ठादिक्रमेण करांगन्यासं कुर्यात् । यथा—ऑं खड्ग हृदयाय नमः, कनिष्ठयोः । इं सुखाय नमः, शिरसे स्वाहा, अनामिकयोः । ॐ वज्राय नमः, शिखायै वषट्, मध्यमयोः । ऐं पाशाय नमः, कवचाय हुंम्, तर्जन्योः । ॐ अंकुशाय नमः, ऐं नेत्रेभ्यो वौषट्, ॐ अंगुष्ठयोः । अः सरत्नाय नमः अस्त्राय फट् । अन्यच्च वाराही अंगुष्ठाभ्यां नमः । आदाय तर्जनीभ्यां नमः । वाराहमुखी मध्यमाभ्यां नमः । अंधे अंधिनि अनामिकाभ्यां नमः । रुंधे रुंधिनि कनि-

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

ष्ठिकाभ्यां नमः। जृंभे जृंभिणि करतलकरपृष्ठाभ्यां नमः। इति करन्यासः। एवं हृदयादिन्यासः। क्रोडाय हृदयाय नमः। वाराही शिरसे स्वाहा। वाराहमुखी शिखायै वषट्। अंधे अंधिनि कवचाय हुम्। रुंधे रुंधिनि नेत्रत्रयाय वौषट्। जृंभे जृंभिणि अस्त्राय फट्। एवं षडंगं विन्यस्य ध्यायेद् देवीं हृदम्बुजे। अथ ध्यानम्। देविध्यानं प्रवक्ष्यामि सर्वकामार्थसिद्धिदम्। इडा च पिंगला चैव सुषुम्ना च विशेषतः। त्रिनाडी सहिता देवी त्रिविधायास्तथा भुवि॥ रक्ताढ्ये कर्णिकांतःस्थित-शव-हृदये संस्थितां क्रोडवक्त्रां हस्ताम्भोजैर्दधानां हलमुशलवराभी-

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

तयह्नीत्त्वणाब्जे । शक्रोस्मद्योतिविद्योजिततनुरुचिरां मुण्डमालां वहन्तीं वार्तालीरक्तवस्त्रां स्तनभरनमितां नौमि देवीं वराहीम् ॥ मध्ये चैव महादेवीं सूर्यकोटिसमप्रभाम्। देवि त्वं च करे वामे धारयन्ती समस्तकम् ॥ प्रसरितां मुखे भीमां ललितानतजिह्विकाम् । प्रसरद्दोस्तु विस्तारां निजकण्ठं समुद्गताम् ॥ विकीर्णकेशनिलयां नानाभरणभूषिताम् । दिगम्बरां महाघोरां प्रत्यालीढपदक्षिणाम् ॥ रतिकामोपविष्टां तां केचिद्ध्यायन्ति योगिनः । विपरीतरतस्थां च ध्याये हृदि मनोहराम् ॥ वर्णिनीं डाकिनीयुक्तां वामदक्षिणपार्श्वयोः । दक्षिणे वर्णिनीं

CC-0. Annalaya Hiralal Sanskrit Collection, New Delhi. Digitized by eGangotri

ध्याये डाकिनीं वामके तथा ॥ वर्णिनीं लोहितां सौम्यां मुक्त-केशीं दिगम्बराम् । कपालकर्तृकाहस्तां वामदक्षिणयोगतः ॥ देवीं गलोच्छलद्रक्तधारपानं च कुर्वतीम् । अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम् ॥ डाकिनीं वामपार्श्वे तु कल्पांतज्वल-नोपमाम् । विद्युच्छटाभनयनां दन्तपङ्क्तिवलाकिनीम् ॥ दंष्ट्राकरालवदनां पीनोन्नतपयोधराम् । महादेवीं महा-घोरां मुक्तकेशीं दिगम्बराम् ॥ लेलिहानमहाजिह्वां मुंडमाला-विभूषिताम् । करस्थेन कपालेन भीषणेनातिभीषणाम् ॥ आद्यां निलयतां ध्यायेत देवीं साधकसत्तमः ॥ इति ध्यात्वा,

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

मानसोपचारैः संपूज्य, नमस्कृत्य, अर्घपात्रं स्थापयेत्पूर्ववत् क्रमात्। आधारशक्त्यै नमः। कूर्माय नमः। अनंताय नमः। पृथिव्यै नमः। सुरासमुद्राय नमः। रत्नदीपाय नमः। कल्पतरूद्यानाय नमः। स्वर्णवेदिकायै नमः। कल्पवृक्षाय नमः। रत्नमंडलाय नमः। रत्नसिंहासनाय नमः। आनन्दकन्दाय नमः। संविलासाय नमः। सर्वतत्त्वात्मकाय नमः। प्रकृतियन्त्रेभ्यो नमः। विकारमयकेशरेभ्यो नमः। पंचाशद्वर्णबीजाय कर्णिकायै नमः। अं अर्कमण्डलाय द्वादशकलात्मने नमः। सं तत्त्वात्मने नमः। रं रजसे नमः।

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

सों मण्डलाय नमः । रं वह्निमंडलाय नमः । तं तमसे नमः । ॐ आत्मने नमः । अं अंतरात्मने नमः । पं परमात्मने नमः। ह्रों ज्ञानात्मने नमः । ॐ सरस्वत्यै नमः । क्लीं कामाय नमः। मूले क्रोडवाराह्यै नमः । इति पूजयेत् । सर्वं कुसुमांजलीयम् । ततः यंत्रोपरि स्थापयेत् । आवाहयेदनेन मंत्रेण । सर्वसिद्धिप्रदे देवि सर्वसौभाग्यदायिनि । क्रोडवाराहि तिष्ठ तिष्ठ ह्रीं ह्रों स्वाहेति पठेत् । ततो यंत्रोपरि प्राणप्रतिष्ठां कुर्यात् । आवाह्य भगवति क्रोडवाराहि इहागच्छ इह तिष्ठ तिष्ठ सन्निहिता भव सन्निरुद्धा भव यन्त्राधिष्ठानं कुरु मम पूजां गृहाण । इत्यावाह्य स्थापनम्।

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

संनिधापनसन्निरोधनाऽमृतीकरणासंकलीकरणावगुंठनमुद्राभिर्देवी-मावाह्य, देव्याः षडङ्गानि विन्यस्य, पुष्पं गृहीत्वा, पुनर्देवीं ध्यात्वा, षोडशोपचारैः पूजयेत् । मूलमंत्रेण पाद्यादिकं दद्यात् । यथा—मूलमुच्चार्य । इदं पाद्यं वाराहि क्रोडमुखि देवतायै कल्पयामि नमः । एषोऽर्घः वाराहमुख्यायै नमः स्वाहा । इदमाचमनीयम् । वस्त्रं आभरणानि गंधं पुष्पं धूपं दीपं च दत्त्वा । नैवेद्यं पुरतः समानीय । अर्घ्यजलेनाभ्युक्ष्यास्त्रेण संरक्ष्य, कवचेनावगुण्ठ्य, अमृतीकृत्य, तदुपरि मूलमष्टधा जप्त्वा, इदं नैवेद्यं वाराह्यै कल्पयामि नमः । इत्युत्सृज्य, अमृतोपस्तरणम-

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

सि स्वाहेति जलं दत्त्वा, प्राणाय स्वाहा। अपानाय स्वाहा। समानाय स्वाहा। उदानाय स्वाहा। व्यानाय स्वाहा। पञ्च प्राणाहुतिं दत्त्वा। तस्या स्वीकारं विभाव्य। अमृतापिधामसि स्वाहा। पुनरपीशानमाचमनीयम्। वाराही कल्पयामि नमः। आचमनीयं दत्त्वा। एतानि तांबूलानि वाराही कल्पयामि नमः। पुष्पाञ्जलिं वाराहीति नमः। अं अंजलित्रयं समभ्यर्च्य, मूलं वाराही नमः स्वाहा। इति देवीं वारत्रयं संतर्प्य। ततो देवीदक्षिणवामक्रमेण चतुष्टये चतुर्दिक्षु षडंगेनाभ्यर्च्य आवरणं पूजयेत्। यथा—वायव्यां गणेशाय नमः। ऐशान्यां गुरुभ्यो नमः।

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

आग्नेय्यां परमगुरुभ्यो नमः। नैर्ऋत्यां क्षेत्रपालाय नमः। पूर्वे कराय नमः। दक्षिणे अतिकरालाय नमः। पश्चिमे विकलाय नमः। उत्तरे महाकालाय नमः। मध्ये आधारशक्तये नमः। कूर्माय नमः। अनन्ताय नमः। पृथिव्यै नमः। आनन्दकन्दाय नमः। संविन्नालाय नमः। पद्मासनाय नमः। कर्णिकायै नमः। आदित्यमण्डलाय नमः। सं सत्त्वाय नमः। सोममण्डलाय नमः। वह्निमण्डलाय नमः। सत्त्वाय नमः। रं रजसे नमः। तं तमसे नमः। ॐ सरस्वत्यै नमः। ॐ कामाय नमः। इति संपूज्य। ॐ ह्रीं एकलिंगायै नमः। ॐ ह्रीं योगिन्यै नमः। ॐ ह्रीं डाकिन्यै नमः।

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

ॐ ह्रीं भैरव्यै नमः। ॐ ह्रीं इन्द्राक्ष्यै नमः। ॐ ह्रीं असितायै नमः। ॐ ह्रीं रंहारायै नमः। मध्ये देवीसिंहासनाय नमः। देवीदक्षिणे ॐ ह्रीं प्रकृतिवर्णिन्यै नमः। वामे प्रकृतिडाकिन्यै नमः। इति संपूज्य, पुनरपि गंधादिभिर्देवीं संपूज्य, पुष्पाञ्जलित्रयेणाभ्यर्च्य, मे (मा) षादिबलिं दद्यात्। बलिमंत्रो यथा—ॐ सर्वसिद्धिप्रदे वर्णिनीये सर्वसिद्धिप्रदे डाकिनीये वाराहि एह्येहि बलिं गृह्ण गृह्ण सर्वसिद्धिं देहि देहि हूं हूं फट् स्वाहा। इति बलिं दत्त्वा। मूलमष्टोत्तरशतं सहस्रं वा जपेत्। अथ गायत्रीमन्त्रः। ह्रीं विद्महे धीमहि तन्नो देवि प्रचोदयात्। इति जप्त्वा, मूलं जपेत्। जपं समर्प्य,

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

प्राणायामं कृत्वा, पुष्पं गृहीत्वा, इति मंत्रेण प्रार्थयेत् । तत्र मंत्रः । उत्तरे शिखरे जाता भूम्यां पर्वतवासिनी ॥ ब्रह्मयोनिसमुत्पन्ने गच्छ देवि ममान्तरे ॥ इति पठेत् । देवीमन्तर्नीत्वा हृत्पद्मे संस्थाप्यात्मानं तद्रूपं विभाव्य, निर्माल्यं शिरसि धृत्वा, चरणामृतं पीत्वा, यथासुखं विहरेत् ॥

इति रुद्रयामले तंत्रे उमामहेश्वरसंवादे
आदिवाराही-पद्धतिः समाप्ता ॥

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

श्रीगणेशाय नमः ।

# अथ आदिवाराहीकवचं प्रारभ्यते

ॐ अस्य श्रीवाराहीकवचमन्त्रस्य त्रिलोचनऋषिः । अनुष्टुप्छन्दः । श्रीआदिवाराहीदेवता । ग्लैं बीजम् । स्वाहा शक्तिः । ऐं कीलकम् । अभीष्टसिद्धयर्थे जपे विनियोगः ॥

अथ ध्यानम् ॥ ध्यात्वेन्द्रनीलवर्णाभां चन्द्रसूर्याग्निलोचनाम् ॥ विधिविष्णुसुरेन्द्रादिमातृभैरवसेविताम् ॥ १॥ हारनूपुर-

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

केयूरवलयैरुपशोभिताम् ॥ ज्वलन्मणिगणप्रोतमुकुटोज्ज्वलशोभिताम् ॥ २ ॥ शस्त्राण्यस्त्राणि सर्वाणि स्वकार्य्यकरणानि च ॥ करैः समस्तैर्विविधैर्बिभ्रतीं मुशलं हलम् ॥३॥ वाराहीदेविकवचं भुक्तिमुक्तिफलप्रदम् ॥ पठेत्त्रिसन्ध्यं रक्षार्थं रोगशत्रुनिकृन्तये ॥ ४ ॥ मेघश्यामरुचिं मनोहरकुचां नेत्रत्रयोद्भासितां कोलास्यां शशिशेखरामचलितैः दंष्ट्रातलैः शोभिताम् ॥ बिभ्राणां स्वकराम्बुजैरसिलतां चर्मासिपाशं सृणिं वाराहीमनुचिन्तये ध्रुववरारूढां शुभालंकृतिम् ॥ ५ ॥ ॐ वार्ताली मे शिरः पातु वाराही भालमुत्तमम् ॥ नेत्रे वराहवदना पातु कर्णौ तथान्धिनी ॥६॥

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

रुन्धिनी नासिका पातु मुखं पातु सुजंभिनी ॥ पातु मे मोहिनी जिह्वां स्तम्भिनी कण्ठमादरात् ॥ ७ ॥ स्कन्धौ तु पञ्चमी पातु भुवौ महिषवाहिनी ॥ सिंहारूढा करौ पातु कुचौ कृष्णमुखी सदा ॥ ८ ॥ हलायुधं च वक्षश्च मध्यमे मुशली मम ॥ नाभिं तु शंखिनी पातु पृष्ठदेशे तु चक्रिणी ॥ ९ ॥ खड्गिनी पातु कट्यां तु मेढ्रयोः पातु खेटकी ॥ गुदं च क्रोडिनी पातु जघनं स्तम्भिनी तथा ॥ १० ॥ चण्डोच्चण्डा च ऊरू च जानुनी शत्रुमर्दिनी ॥ जंघाद्वयोर्भद्रकाली चामुण्डा गुल्फयोर्द्वयोः ॥ ११ ॥ पादौ तदङ्गुलीश्चैव पातु चोन्मत्तभैरवी ॥ सर्वाङ्गं सततं पातु

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

कालसंदीपनी मम ॥ १२ ॥ वाराहीकवचं दिव्यं सर्वसिद्धिप्र-दायकम् ॥ सर्वशत्रुक्षयकरं सर्वकार्यकरं शुभम् ॥ १३ ॥

इति श्रीरुद्रयामले तन्त्रे उमामहेश्वरसंवादे
आदिवाराहीकवचं समाप्तम् ॥

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

श्रीगणेशाय नमः ।

# अथ आदिवाराहीस्तोत्रं प्रारभ्यते

देव्युवाच ॥ नमोऽस्तु देवी वाराही जयैकारस्वरूपिणी ॥ जपित्वा भूमिरूपेण नमो भगवती प्रिये ॥ १ ॥ जयक्रोडास्तु वाराही देवी त्वां च नमाम्यहम् ॥ जय वाराहि विश्वेशी मुख्यवाराहि ते नमः ॥ २ ॥ मुख्यवाराहि वन्दे त्वां अन्धे-अंधिनि ते नमः ॥ सर्वदुष्टप्रदुष्टानां वाक्स्तम्भनकरी नमः॥३॥

CC-0. Agamnigam Nagaraja Collection, New Delhi. Digitized by eGangotri

नमः स्तम्भिनि स्तम्भे त्वां जृम्भे जृम्भिणि ते नमः ॥ रुन्धे रुन्धिनि वन्दे त्वां नमो देवी तु मोहिनी ॥४॥ स्वभक्तानां हि सर्वेषां सर्वकामप्रदे नमः ॥ बाह्वोः स्तम्भकरी वन्दे चित्तस्तम्भिनि ते नमः ॥ ५ ॥ चक्षुस्तम्भिनि त्वां मुख्यस्तम्भिनी ते नमो नमः ॥ जगत्स्तम्भिनि वन्दे त्वां जिह्वास्तम्भनकारिणी ॥६॥ स्तम्भनं कुरु शत्रूणां कुरु मे शत्रुनाशनम् ॥ शीघ्रं वश्यं च कुरुते योऽग्नौ वाचात्मके नमः ॥ ७ ॥ टचतुष्टयरूपे त्वां शरणं सर्वदा भजे ॥ होमात्मके फट्रूपेण जय आद्यानने शिवे ॥८॥ देहि मे सकलान्कामान् वाराही जगदीश्वरी ॥ नमस्तुभ्यं नमः

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

स्तुभ्यं नमस्तुभ्यं नमोनमः ॥९॥ इदमाद्याननास्तोत्रं सर्वपाप-विनाशनम् ॥ पठेद्यः सर्वदा भक्त्या पातकैर्मुच्यते तथा ॥१०॥ लभन्ते शत्रवो नाशं दुःखरोगापमृत्यवः ॥ महदायुष्यमाप्नोति अलक्ष्मीर्नाशमाप्नुयात् ॥ ११ ॥ न भयं विद्यते क्वापि सर्वदा विजयो भवेत् ॥ अभीष्टार्थान् लभेत्सर्वान् शरीरी नात्र संशयः ॥ १२ ॥ इति श्रीरुद्रयामले उमामहेश्वरसंवादे आदिवाराही-स्तोत्रं समाप्तम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीगणेशाय नमः ।

# अथ आदिवाराहीनिग्रहाष्टकम्

देवि क्रोडमुखि त्वदंघ्रिकमलद्वन्द्वानुरक्तात्मने मह्यं दुह्यति यो महेशि मनसा कायेन वाचा नरः ॥ तस्याशु त्वदयोग्रनिष्ठुरहलाघातप्रभूतव्यथापर्यस्यन्मनसो भवन्तु वपुषः प्राणाः प्रयाणोन्मुखाः ॥ १ ॥ देवि त्वत्पदपद्मभक्तिविभवप्रक्षीणदुष्कर्मणि प्रादुर्भूतनृशंसभावमलिनां वृत्तिं विधत्ते मयि ॥ यो देही भुवने तदीयहृदयान्निर्गत्वरैर्लोहितैः सद्यः पूरयसे कराब्जचषकं वाञ्छा-

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

फलैर्मामपि ॥ २ ॥ चण्डोत्तुण्डविदीर्णदुष्टहृदयप्रोद्भिन्नरक्तच्छटा-
हालापानमदाट्टहासनिनदाटोपप्रतापोत्कटम् ॥ मातर्मत्परिपन्थि-
नामपहृतैः प्राणैस्त्वदंघ्रिद्वयं ध्यानोद्दामरवैर्भवोदयवशात्संतर्पयामि
क्षणात् ॥ ३ ॥ श्यामां तामरसाननाङ्घ्रिनयनां सोमार्धचूडां
जगत्त्राणव्यग्रहलायुधाग्रमुसलां संत्रासमुद्रावतीम् ॥ ये त्वां
रक्तकपालिनीं हरवरारोहे वराहाननां भावैः संदधते कथं क्षण-
मपि प्राणान्ति तेषां द्विषः ॥ ४ ॥ विश्वाधीश्वरवल्लभे विजयसे
या त्वं नियन्त्र्यात्मिका भूतान्ता पुरुषायुषावधिकारी पाकप्रदा
कर्मणाम् ॥ त्वां याचे भवतीं किमप्यवितथं को मद्विरोधी

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

जनस्तस्यायुर्मम वाञ्छितावधि भवेन्मातस्तवैवाज्ञया ॥ ५ ॥
मातः सम्यगुपासितुं जडमतिस्त्वां नैव शक्नोम्यहं यद्यप्यन्वि-
तदैशिकाङ्घ्रिकमलानुक्रोशपात्रस्य मे ॥ जन्तुः कश्चन चिन्त-
यत्यकुशलं यस्तस्य तद्वैशसं भूयाद्देवि विरोधिनो मम च ते
श्रेयःपदासङ्गिनः ॥ ६ ॥ वाराहि व्यथमानमानसगलत्सौख्यं
तदाशाबलिं सीदन्तं यमपाकृताध्यवसितं प्राप्ताखिलोत्पादितम् ॥
क्रन्दद्बन्धुजनैः कलङ्कितकुलं कण्ठव्रणोद्यत्कृमिं पश्यामि प्रति-
पन्नमाशु पतितं भ्रान्तं लुठन्तं मुहुः ॥ ७ ॥ वाराहि त्वमशेष-
जन्तुषु पुनः प्राणात्मिका स्पन्दसे शक्तिव्याप्तचराचरा खलु

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

यतस्त्वामेतदभ्यर्थये ॥ त्वत्पादाम्बुजसङ्गिनो मम सकृत्पापं चिकीर्षन्ति ये तेषां मा कुरु शङ्करप्रियतमे देहान्तरावस्थितिम् ॥८॥

इति श्रीआदिवाराहीनिग्रहाष्टकं सम्पूर्णम् ॥

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

श्रीगणेशाय नमः ।

# अथ आदिवाराह्यनुग्रहाष्टकम्

ईश्वर उवाच ॥ मातर्जगद्रचननाटकसूत्रधारः सद्रूपमाकलयितुं परमार्थतोऽयम् ॥ ईशोऽप्यनीश्वरपदं समुपैति तादृक्कोऽन्यः स्तवं किमिव तावकमादधातु ॥ १ ॥ नामानि किन्तु गृणतस्तव लोकतुण्डे नाडम्बरं स्पृशति दण्डधरस्य दण्डः ॥ यल्लेशलम्बितभवाम्बुनिधिर्यतो यत्त्वन्नामसंसृतिरियं ननु नः

CC-0. ... New Delhi. Digitized by eGangotri

स्तुतिस्ते ॥ २ ॥ त्वच्चिन्तनादरसमुल्लसदप्रमेयानन्दोदयात्समुदितः स्फुटरोमहर्षः ॥ मातर्नमामि सुदिनानि सदेत्यमुं त्वामभ्यर्थयेऽर्थमिति पूरयताद्दयालो ॥ ३ ॥ इन्द्रेन्दुमौलिविधिकेशवमौलिरत्नरोचिश्चयोज्ज्वलितपादसरोजयुग्मे ॥ चेतो नतौ मम सदा प्रतिबिम्बता त्वं भूयो भवानि विदधातु सदोरुहारे ॥ ४ ॥ लीलोद्धृतक्षितितलस्य वराहमूर्तेर्वाराहमूर्तिरखिलार्थकारी त्वमेव ॥ प्रालेयरश्मिसुकलोल्लसितावतंसा त्वं देवि वामतनुभागहरा हरस्य ॥ ५ ॥ त्वामम्ब तप्तकनकोज्ज्वलकान्तिमन्तर्ये चिन्तयन्ति युवतीतनुमागलान्ताम् ॥ चक्रायुधत्रिनयनाम्बर-

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

पोतृवक्त्रां तेषां पदाम्बुजयुगं प्रणमन्ति देवाः ॥ ६ ॥ त्वत्सेव-
नस्खलितपापचयस्य मातर्मोक्षोऽपि यत्र न सतां गणनामुपैति ॥
देवासुरोरगनृपालनमस्य पादस्तत्र श्रियः पद्मगिरः कियदेवमस्तु
॥ ७ ॥ किं दुष्करं त्वयि मनोविषयं गतायां किं दुर्लभं त्वयि
विधानवदर्चितायाम् ॥ किं दुष्करं त्वयि सकृत्स्मृतिमागतायां
किं दुर्जयं त्वयि कृतस्तुतिवादपुंसाम् ॥ ८ ॥

इति श्रीआदिवाराह्यनुग्रहाष्टकं सम्पूर्णम् ॥ १० ॥

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

# अथ आदिवाराहीसहस्रनाम प्रारभ्यते

श्रीगणेशाय नमः ॥ श्रीदेव्युवाच ॥ श्रीकण्ठ करुणासिन्धो दीनबन्धो जगत्पते ॥ भूतिभूषितसर्वाङ्ग परात्परतर प्रभो ॥ १ ॥ कृताञ्जलिपुटा भूत्वा पृच्छाम्येकं दयानिधे ॥ आद्या या चित्स्वरूपा या निर्विकारा निरञ्जना ॥२॥ बोधातीता ज्ञानगम्या कूटस्था-ऽऽनन्दविग्रहा ॥ अग्राह्याऽतीन्द्रिया शुद्धा निरीहा स्वावभासिका

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

॥३॥ गुणातीता निष्प्रपञ्चा ह्यवाङ्मनसगोचरा ॥ प्रकृतिर्जग-
दुत्पत्तिस्थितिसंहारकारिणी ॥ ४ ॥ रक्षार्थे जगतां देवका-
र्यार्थं वा सुरद्विषाम् ॥ नाशाय धत्ते सा देहं तत्तत्कार्यैकसाधनम्
॥ ५ ॥ तत्र भूधरणार्थाय यज्ञविस्तारहेतवे ॥ विद्युत्क्लेश-
हिरण्याक्षवलाकादिवधाय च ॥ ६ ॥ आविर्बभूव या शक्ति-
र्घोरा भूदाररूपिणी ॥ वाराही विकटाकारा दानवासुरनाशिनी
॥ ७ ॥ सद्यःसिद्धिकरी देवी घोरा घोरतरा शिवा ॥ तस्याः
सहस्रनामाख्यं स्तोत्रं मे समुदीरय ॥ ८ ॥ कृपालेशोऽस्ति मयि
चेद्भाग्यं मे यदि वा भवेत् ॥ अनुग्राह्या यद्यहं स्यां तदा वद

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

दयानिधे ॥ ९ ॥ ईश्वरोवाच ॥ साधु साधु वरारोहे धन्या बहुमतासि मे ॥ शुश्रूषादिसमुत्पन्ना भक्तिश्रद्धान्विता तव ॥ १० ॥ सहस्रनाम वाराह्याः सर्वसिद्धिविधायि च ॥ तव चेन्न प्रवक्ष्यामि प्रिये कस्य वदाम्यहम् ॥११॥ किन्तु गोप्यं प्रयत्नेन संरक्ष्यं प्राणतोऽपि च ॥ विशेषतः कलियुगे न देयं यस्य कस्यचित् ॥ १२ ॥ सर्वेऽन्यथा सिद्धिभाजो भविष्यन्ति वरानने ॥

ॐ अस्य श्रीवाराहीसहस्रनामस्तोत्रस्य महादेव ऋषिः । अनुष्टुप् छन्दः । वाराही देवता । ऐं बीजम् । क्रों शक्तिः । हूं कीलकम् । मम सर्वार्थसिद्ध्यर्थे जपे विनियोगः ॥

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

ॐ वाराही वामनी वामा वगला वासवी वसुः ॥ वैदेही वीरसूर्बाला वरदा विष्णुवल्लभा ॥ १३ ॥ वन्दिता वसुदा वश्या व्यात्तास्या वञ्चिनी बला ॥ वसुन्धरा वीतिहोत्रा वीतरागा विहायसी ॥ १४ ॥ सर्वा स्वनिप्रिया काम्या कमला काञ्चनी रमा ॥ धूम्रा कपालिनी वामा कुरुकुल्या कलावती ॥ १५ ॥ याम्याऽऽग्नेयी धरा धन्या धर्मिणी ध्यानिनी ध्रुवा ॥ धृतिर्लक्ष्मीर्जया तुष्टिः शक्तिर्मेधा तपस्विनी ॥ १६ ॥ वेधा जया कृतिः कान्तिः स्वाहा शान्तिर्दमा रतिः ॥ लज्जा मतिः स्मृतिर्निद्रा तन्द्रा गौरी शिवा स्वधा ॥ १७ ॥ चण्डी दुर्गा-

CC-0. Arya Samaj Foundation Chennai and eGangotri... Digitized by eGangotri

ऽभया भीमा भाषा भामा भयानका ॥ भूदारा भयहा भीरुर्भैरवी भङ्गुरा भटी ॥ १८ ॥ घुर्घुरा घोषणा घोरा घोषिणो घोणसंयुता ॥ घनाघना घर्घरा च घोणयुक्ताऽघनाशिनी ॥ १९ ॥ पूर्वाग्नेयी पातु याम्या वायव्युत्तरवारुणी ॥ ऐशान्यूर्द्ध्वाधःस्थिता च पृष्ठे दक्षाग्रवामगा ॥२०॥ हृन्नाभिब्रह्मरन्ध्रार्कस्वर्गपातालभूमिगा ॥ ऐं श्रीः ह्रीः क्लीं तीर्थगतिः प्रीतिर्धीर्गीः कलाऽव्यया ॥ २१ ॥ ऋग्यजुःसामरूपा च परा यात्रीण्युदुम्बरा ॥ गदासिशक्तिचापेषुशूलचक्रर्ष्टिधारिणी ॥ २२ ॥ जरती युवती बाला चतुरङ्गबलोत्कटा ॥ सत्याक्षरा चाधिभेत्री

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

धात्री पात्री परा पटुः ॥ २३ ॥ क्षेत्रज्ञा कंपिनो ज्येष्ठा दुराधर्षा
धुरन्धरा ॥ मालिनी मानिनी माता माननीया मनस्विनी ॥२४॥
महोत्कटा मन्युकरी मनुरूपा मनोजवा ॥ मेदस्विनी मद्यरता
मधुपा मङ्गलाऽमरा ॥ २५ ॥ माया माताऽऽमयहरी मृडानी
महीला मृतिः ॥ महादेवी मोहहरी मञ्जुमृत्युञ्जयाऽमला ॥२६॥
मांसला मानवा मूला महारात्रिर्महालसा ॥ मृगाङ्कमीनकारी
स्यान्महिषघ्नी मदन्तिका ॥ २७ ॥ मूर्च्छामोहमृषामोघामद-
मृत्युमलापहा ॥ सिंहर्क्षमहिषव्याघ्रमृगक्रोडानना धुनी ॥२८॥
धरिणी धारिणी धेनुर्धरित्री धावनी धवा ॥ धर्मध्वना ध्यानपरा

CC-0. Mutterkuh R. Nagarajan Collection, New Delhi. Digitized by eGangotri

धनधान्यधराप्रदा ॥ २६ ॥ पापदोषरिपुव्याधिनाशिनी सिद्धि-
दायिनी ॥ कलाकाष्ठात्रपापन्नाऽहस्त्रुटिश्वासरूपिणी ॥ ३० ॥
समृद्धा सुभुजा रौद्री राधा राका रमाऽरणिः ॥ रामा रतिप्रिया
रुष्टा रक्षिणी रविमध्यगा ॥ ३१ ॥ रंजनी रमणी रेवा रङ्किनी
रञ्जिनी रमा ॥ रोषा रोषवती रूक्षा करिराज्यप्रदा रता ॥ ३२ ॥
रूक्षा रूपवती रास्या रुद्राणी रणपण्डिता ॥ गंगा च यमुना
चैव सरस्वतिस्वसूर्मधूः ॥ ३३ ॥ गण्डकी तुङ्गभद्रा च काबेरी
कौशिकी पटुः ॥ खट्वोरगवती चारा सहस्राक्षा प्रतर्दना ॥ ३४ ॥
सर्वज्ञा शाङ्करी शास्त्री जटाधारिण्ययोरदा ॥ यावनी सौरभी

CC-0. In Public Domain. Nagarjuna Collection, New Delhi. Digitized by eGangotri

कुब्जा वक्रतुण्डा वधोद्यता ॥२५॥ चन्द्रापीडा वेदवेद्या शंखिनी नीललोहिता ॥ ध्यानातीता परिच्छेद्या मृत्युरूपा त्रिवर्गदा ॥ २६ ॥ अरूपा बहुरूपा च नानारूपा नतानना ॥ वृषाकपि-वृषारूढा वृषेशी वृषवाहना ॥ २७ ॥ वृषप्रिया वृषावर्ता वृषपर्वा वृषाकृतिः ॥ कोदण्डिनी नागचूडा चक्षुष्या परमार्थिका ॥२८॥ दुर्वासा दुर्गहा देवी दुरावासा दुरारिहा ॥ दुर्गा राधा दुर्ग-हंत्री दुराराध्या दवीयसी ॥ २९ ॥ दुरावासा दुःप्रहस्ता दुःप्र-कम्पा दुरुहिणी ॥ सुवेणी श्रमणी श्यामा मृगव्याधार्कतापिनी ॥ ४० ॥ दुर्गा तार्क्षी पाशुपती कौणपी कुणपाशना ॥

CC-0. Aratsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

कपर्दिनी कामकामा कमनीया कलोज्ज्वला ॥ ४१ ॥ कासा-
बहृत्कारकानी कम्बुकण्ठी कृतागमा ॥ कर्कशा कारणा कान्ता
कल्पाकल्पा कटंकटा ॥ ४२ ॥ श्मशाननिलया भिन्ना गजा-
रूढा गजापहा ॥ तत्प्रिया तत्परा राया स्वर्भानुः कालवंचिनी
॥ ४३ ॥ शाखा विशिखा गोशाखा सुशाखा शेखशाखिनी ॥
व्यङ्गा सुभाङ्गा वामाङ्गा नीलाङ्गाऽनङ्गरूपिणी ॥ ४४ ॥ साङ्गो-
पाङ्गा च शारङ्गा सुभाङ्गा रङ्गरूपिणी ॥ भद्रा सुभद्रा भद्राक्षी
सिंहिका विनताऽदितिः ॥ ४५ ॥ हृद्याविद्या सुपद्या च गद्य-
पद्यप्रियाप्रसूः ॥ चर्चिका भोगवत्यम्बा सारसी सवरी नटी

CC-0. Mumukshu Bhawan Varanasi Collection, New Delhi. Digitized by eGangotri

॥ ४६ ॥ योगिनी पुष्कलाऽनन्ता परासांख्या शची सती ॥
निम्नगा निम्ननाभिश्च सहिष्णुर्जागृती लिपिः ॥ ४७ ॥
दमयन्ती दमी दण्डोद्दण्डिनी दारदायिका ॥ दीपिनी दाविनी
दात्री दक्षकन्या दरोदरंत् ॥ ४८ ॥ दाहिनी द्रविणी दर्वी
दण्डिनी दण्डनायिका ॥ दानप्रिया दोषहन्त्री दुःखदारिद्र्यना-
शिनी ॥ ४९ ॥ दोषदा दोषकृद्दोग्ध्री दोहदी देविकाऽदना ॥
दर्वीकरी दुर्वलिता दुर्युगाऽद्वयवादिनी ॥ ५० ॥ चराचरानन्त-
वृष्टिरुन्मत्ता कमलालसा ॥ तारिणी तारकान्तारा परमात्मा
कुब्जलोचना ॥ ५१ ॥ इन्दुर्हिरण्यकवचा व्यवस्था व्यवसा-

CC-0. Arutselvan R. Nagarajan Collection, New Delhi. Digitized by eGangotri

यिका ॥ ईशानन्दा नदी नागी यक्षिणी सर्पिणी वरी ॥५२॥
सुधा सुरा विश्वसहा सुवर्णाङ्गदधारिणी ॥ जननी प्रीतिपाकेरुः
साम्राज्ञी संविदुत्तमा ॥ ५३ ॥ अमेयाऽरिष्टदमनी पिङ्गला लिङ्ग-
धारिणी ॥ चामुण्डा प्लाविनी हाला बृहज्ज्योतिरुरुक्रमा ॥५४॥
सुप्रतीका च सुग्रीवा हव्यवाहा प्रलापिनी ॥ नभस्या माधवी
ज्येष्ठा शिशिरा ज्वालिनी रुचिः ॥ ५५ ॥ शुक्ला शुक्रा शुचा
शोका शुकी भेकी पिकी बकी ॥ पृषदश्वा नभोयोनिः सुप्रतीका
विभावरी ॥ ५६ ॥ गर्विता गुर्विणी गण्या गुरुर्गुरुतरी गया ॥
गन्धर्वी गणिका गुन्द्रा गारुडी गोपिकाऽग्रगा ॥ ५७ ॥ गणेशी

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

गामिनी गन्ता गोपतिर्गन्धिनी गवी ॥ गर्जिता गाननी गोना गोरक्षा गोविदां गतिः ॥ ५८ ॥ ग्राथिकी ग्रथिकृद्गोष्ठी गर्भरूपा गुणैषिणी ॥ पारस्करी पाञ्चनदा बहुरूपा विरूपिका ॥ ५९ ॥ उहा वूहा दुरूहा च सम्मोहा मोहहारिणी ॥ यज्ञविग्रहिणी यज्ञा याजयूका यशस्विनी ॥ ६० ॥ अग्निष्टोमोऽत्यग्निष्टोमो वाजपेयश्च षोडशी ॥ पुण्डरीकोऽश्वमेधश्च राजसूयश्च नाभसः ॥ ६१ ॥ स्विष्टकृद्बहुसौवर्णो गोसवश्च महाव्रतः ॥ विश्वजिद्ब्रह्मयज्ञश्च प्राजापत्यः शिलायवः ॥६२॥ अश्वक्रान्तो रथक्रान्तो विष्णुक्रान्तो विभावसुः ॥ सूर्यक्रान्तो

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

गजक्रान्तो बलिभिन्नागयज्ञकः ॥६३॥ सावित्री चार्द्धसावित्री सर्वतोभद्रवारुणाः ॥ आदित्यामयगोदोहगवामयमृगामयाः ॥ ६४ ॥ सर्पमयः कालपिञ्जः कौण्डिण्योपनकाहलः ॥ अग्निविद्द्वादशाहस्त्रो पांशुः सोमविधोर्हनः ॥ ६५ ॥ अश्वप्रतिग्रहो बर्हिरथोऽभ्युदयत्रृद्धिराट् ॥ सर्वस्वदक्षिणो दीक्षा सोमाख्यः समिदाह्वयः ॥ ६६ ॥ कठायनश्च गोदोहः स्वाहाकारस्तनूनपात् ॥ दण्डापुरुषमेधश्च श्येनो वज्रइषुर्यमः ॥६७॥ अङ्गिराः कङ्कभेरुण्डा चान्द्रायणपरायणः ॥ ज्योतिष्टोमः कुंथो दर्शो नन्द्याख्यः पौर्णमासिकः ॥ ६८ ॥ गजप्रतिग्रहो रात्रिः सौरभः शाङ्कलायनः ॥

CC-0. Arutsaktni R. Nagarajan Collection, New Delhi. Digitized by eGangotri

सौभाग्यकृच्चकारीषो वैदलायनरामठा ॥ ६९ ॥ शोचिष्कारी नाचिकेतः शान्तिकृत्पुष्टिकृत्तथा ॥ वैनतेयोच्चाटनौ च वशीकरणमारणो ॥७०॥ त्रैलोक्यमोहनो वीरः कन्दर्पबलशातनः ॥ शङ्खचूडो गजच्छायो रौद्राख्यो विष्णुविक्रमः ॥७१॥ भैरवः कवहाख्यश्चावभृथोऽष्टाकपालकः ॥ श्रौषट् वौषट् वषट्कारः पाकसंस्था परिश्रुती ॥ ७२ ॥ चमनो नरमेघश्च कारीरी रत्नदानिका ॥ सौत्रामणी च भारुन्दा बार्हस्पत्यो बलंगमः ॥७३॥ प्रचेताः सर्वसत्रश्च गजमेघः करम्भकः ॥ हविसंस्था सोमसंस्था पाकसंस्था गरुत्मती ॥ ७४ ॥ सत्यसूर्यश्चमसस्स्रुकस्रुवोलूखलमेक्षणी ॥

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

चफलो मन्थनी मेढी यूपः प्राग्वंशकुंचिका ॥ ७५ ॥ रश्मिरंशुश्च दोर्भ्यश्च वारुणोदधि पविः कुथा ॥ आप्तोर्यामो द्रोणकलशो मैत्रावरुण आश्विनः ॥ ७६ ॥ पात्नीवतश्च मन्थी च हारियोजन एव च ॥ प्रतिप्रस्थानशुक्रौ च सामिधेनी समित्समा॥७७॥ होताऽध्वर्य्युस्तथोद्गाता नेता त्वष्टा च योत्रिका ॥ आग्नीध्रो छवागष्टावग्नावस्तुत्प्रतर्दकः ॥ ७८ ॥ सुब्रह्मण्यो ब्राह्मणश्च मैत्रावरुणवारुणाः ॥ प्रस्तोता प्रतिप्रस्थाता यजमानो ध्रुवंत्रिका ॥७९॥ आमिक्षामीषदाज्यं च हव्यं कव्यं चरुः पयः ॥ जुहूद्भृणोभृत ब्रह्मा च त्रयी त्रेता तरस्विनी ॥ ८० ॥ पुरोडाशः पशू-

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

कर्षः प्रोक्षणी ब्रह्मयज्ञिनी ॥ अग्निजिह्वा दर्भरोमा ब्रह्मशीर्षा महोदरी ॥ ८१ ॥ अमृतप्राशिका नारायणी नग्ना दिगम्बरा ॥ ॐ कारिणी चतुर्वेदरूपा श्रुतिरनुल्वणा ॥८२॥ अष्टादशभुजा रम्भा सत्या गगनचारिणी ॥ भीमवक्त्रा महावक्त्रा कीर्तिराकृष्ण-पिङ्गला ॥ ८३ ॥ कृष्णमूर्द्धा महामूर्द्धा घोरमूर्द्धा भयानना ॥ घोरानना घोरजिह्वा घोररावा महाव्रता ॥ ८४ ॥ दीप्तास्या दीप्तनेत्रा च चण्डप्रहरणा जटी ॥ सुरभी सौनभी वीची छाया सन्ध्या च मांसला ॥ ८५ ॥ कृष्णा कृष्णाम्बरा कृष्णशाङ्गिणी कृष्णवल्लभा ॥ त्रासिनी मोहिनी द्वेष्या मृत्युरूपा भयावहा

CC-0. Arutselvi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

॥ ८६ ॥ भीषणा दानवेन्द्रघ्नी कल्पकर्त्री क्षयंकरी ॥ अभया पृथिवी साध्वी केशिनी व्याधिजन्महा ॥ ८७ ॥ अक्षोभ्या ह्लादिनी कन्या पवित्रा रोपिणी शुभा ॥ कन्यादेवी सुरादेवी भीमादेवी मदन्तिका ॥ ८८ ॥ शाकंभरी महाश्वेता धूम्रा धूम्रेश्वरीश्वरी ॥ वीरभद्रा महाभद्रा महादेवी महासुरी ॥ ८९ ॥ श्मशानवासिनी दीप्ता चितिसंस्था चितिप्रिया ॥ कपालहस्ता खट्वाङ्गी खड्गिनी शूलिनी हली ॥ ९० ॥ कान्तारिणी महायोगी योगमार्गा युगग्रहा ॥ धूम्रकेतुर्महास्यायुर्युगानां परिवर्तिनी ॥ ९१ ॥ अंगारपिंगकेशाक्षा सर्पवर्णा च

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

चक्रिणी ॥ वेताली ब्रह्मवेताली महावेतालिका तथा ॥ १२ ॥ विद्याराज्ञी मोहराज्ञी महाराज्ञी महोदधी ॥ भूतं भव्यं भविष्यं च सांख्यं योगस्तपो दमः ॥ १३ ॥ अध्यात्मं चाधिदैवं चाधिभूतांश एव च ॥ घण्टारवविरूपाक्षी शिखिविच्छीचयप्रिया ॥ १४ ॥ खड्गशूलगदाहस्ता महिषासुरमर्दिनी ॥ मातंगी मत्तमातंगी कौशिकी ब्रह्मवादिनी ॥ १५ ॥ उग्रतेजा सिद्धसेना जृम्भिणी मोहिनी तथा ॥ जया च विजया चैव विनता कद्रुरेव च ॥१६॥ धात्री विधात्री विक्रांता ध्वस्ता मूर्च्छा च मूर्च्छनी ॥ दमनी

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

दामिनी दम्या छेदिनी तापिनी तपी ॥१७॥ बन्धिनी बाधिनी बन्ध्या बोधातीता बुधप्रिया ॥ हरिणी हारिणी हन्त्री धरिणी धारिणी धरा ॥ १८ ॥ विसाधिनी साधिनी च सन्ध्या संधोपनी प्रिया ॥ रेवती कालकर्णी च सिद्धिर्लक्ष्मीररुन्धती ॥ ९९ ॥ धर्मप्रिया धर्मरती धर्मिष्ठा धर्मचारिणी ॥ व्युष्टिः ख्यातिः सिनीवाली कुहूः ऋतुमती स्मृतिः ॥१००॥ त्वाष्ट्री वैरोचनी मैत्री नीरजा कैटभेश्वरी ॥ भ्रमणी भ्रामिणी भ्रामा भ्रमरी भ्रामरी भ्रमा ॥ १०१ ॥ निष्कला कलहा नीता कौ-

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

लाकारा कलेवरा ॥ विद्युज्जिह्वा वर्षिणी च हिरण्याक्षनिपातिनी ॥१०२॥ जितकामा कामृगया कोला कल्पांगिनी कला ॥ प्रधाना तारका तारा हितात्मा हितभेदिनी ॥१०३॥ दुरक्षरा परंब्रह्म महातांना महाहवा ॥ वारुणी व्यरुणी वाणी वीणा वेणी विहंगमा ॥ १०४ ॥ मोदप्रिया मोदकिनी प्लवनप्लाविनी प्लुतिः ॥ अजरा लोहिता लाक्षा प्रतप्ता विश्वभोजिनी ॥ १०५ ॥ मनो बुद्धिरहङ्कारः क्षेत्रज्ञा क्षेत्रपालिका ॥ चतुर्वेदा चतुर्भारा चतुरन्ता चरुप्रिया ॥ १०६ ॥ चर्विणी चोरिणी चारी चांगरी चर्मभैरवी ॥

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

निर्लेपा निष्प्रपञ्चा च प्रशान्ता नित्यविग्रहा ॥ १०७ ॥ स्तव्या स्तवप्रिया व्याला गुरुराश्रितवत्सला ॥ निष्कलंका निरालम्बा निर्द्वन्द्वा निष्परिग्रहा ॥१०८॥ निर्गुणा निर्मला नित्या निरीहा निरघा नवा ॥ निरिन्द्रिया निराभासा निर्मोहा नीतिनायिका ॥ १०९ ॥ निरिन्धना निष्कला च लीलाकारा निरामया ॥ मुण्डा विरूपा विकृता पिङ्गलाक्षी गुणोत्तरा ॥११०॥ पद्मगर्भा महागर्भा विश्वगर्भा विलक्षणा ॥ परमात्मा परेशानी परा पारा परन्तपा ॥१११॥ संसारसेतुः क्रूराक्षी मूर्च्छा मग्ना मनुप्रिया ॥

CC-0. Anutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

विस्मया दुर्जया दक्षा दनुहन्त्री दयालया ॥ ११२ ॥ परब्रह्माऽऽनन्दरूपा सर्वसिद्धिविधायिनी ॥ ॐ ॥ एवमुड्डामरतन्त्रान्मयोद्धृत्य प्रकाशितम् ॥ ११३ ॥ गोपनीयं प्रयत्नेन नाख्येयं यस्य कस्यचित् ॥ यदीच्छसि द्रुतं सिद्धिमैश्वर्यं चिरजीविताम् ॥ ११४ ॥ आरोग्यं नृपसम्मानं तदा नामानि कीर्तयेत् ॥ नाम्नां सहस्रं वाराह्याः मया ते समुदीरितम् ॥ ११५ ॥ यः पठेच्छृणुयाद्वापि सर्वपापैः प्रमुच्यते ॥ अश्वमेधसहस्रस्य वाजपेयशतस्य च ॥ ११६ ॥ पुण्डरीकायुत-

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

स्यापि फलं पाठात् प्रजायते ॥ पठतः सर्वभावेन सर्वाः स्युः सिद्धयः करे ॥ ११७ ॥ जायते महदैश्वर्य्यं सर्वेषां दयितो भवेत् ॥ घनसारायते वह्निरगाधोऽब्धिः कणायते ॥ ११८ ॥ सिद्धयश्च तृणायन्ते विषमप्यमृतायते ॥ हारायन्ते महासर्पाः सिंहः क्रीडामृगायते ॥ ११९ ॥ दासायन्ते महीपाला जगन्मित्रायतेऽखिलम् ॥ तस्मान्नाम्नां सहस्रेण स्तुता सा जगदम्बिका ॥ १२० ॥ प्रयच्छत्यखिलान् कामान् देहान्ते परमां गतिम् ॥ इदं पूर्वमधीयानो दौष्यन्तिर्भरतः प्रिये ॥ १२१ जिगाय

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

पृथिवीं सर्वां रथेनैकेन षट्दिनात् ॥ आजहाराश्वमेधानां सहस्रद्वितयं नृपः ॥ १२२ ॥ एकैकस्मिन् स्थिते यागे गुरवे दक्षिणाकृते ॥ सहस्रं यत्र यज्ञानां कण्वाय भरतो ददौ ॥ १२३ ॥ पञ्चलक्षाणि वर्षाणां बुभुजे मेदिनीं पुरा ॥ पञ्चाशीतिसहस्राणि भार्याणां तस्य चाभवन् ॥ १२४ ॥ मान्धातृप्रमुखाश्चान्ये नृपाः सिद्धिं प्रपेदिरे ॥ उद्दालकप्रभृतयो मुनयश्च वरानने ॥१२५॥ गुरौ किन्तु प्रकर्तव्या भक्तिरव्यभि-चारिणी ॥ गुरुभक्तिमृते नैव सिध्यतीति तवोदितम् ॥ १२६ ॥ यथा देवे तथा मन्त्रे यथा मन्त्रे तथा गुरौ ॥ भक्तिः कार्या

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

निष्कपटा सद्यः सिद्धिमभीप्सता ॥ १२७ ॥ एतत्सर्वमशेषेण समासात्कथितं तव ॥ गोप्यं प्रयत्नतस्तत्र प्रमाणं वचनं मम ॥ १२८ ॥ ध्येया पूज्या च वाराही पाठ्यं नाम सहस्रकम् ॥ सर्वसिद्धिः करे कार्या सत्यं सत्यं तवोदितम् ॥ १२९ ॥

इति श्रीउड्डामरतन्त्रे देवदेवीसंवादे आदिवाराही-
सहस्रनामस्तोत्रं समाप्तम् ॥

अलवर राज्यान्तर्गत खेडा मङ्गलसिंह संश्रित भीखाहेडी ग्राम वास्तव्य
पं० गङ्गाधरशास्त्रिणः पुत्रेण पं० प्रभुनारायणशर्मणा संगृहीतम् ।

CC-0. Mumukshu Bhawan Varanasi Collection, New Delhi. Digitized by eGangotri

# * आरती *

जय जय जय जय जगदम्बे माँ × १ ॥ जय जय जय जय जगदम्बे माँ ॥ जय जय जय जय जगदम्बे आरति गिरिजा देवी हे आरति गिरिजा देवी त्रिभुवन जगदम्बे माँ ॥ १ ॥ तुम ब्रह्माणि च तुम रुद्राणि च तुम कमला वाणी माँ तुम कमला वाणी माँ आरति त्रिभुवन रानी आरति त्रिभुवन रानी युग युग युग रानी जय जय जय जय जगदम्बे माँ ॥ २ ॥ लज्जा करुणा रूपा तुम विधि हरि हर रूपा माँ तुम विधि हरि हर रूपा त्रिभुवन ललिता रानी त्रिभुवन ललिता रानी युग युग युग रूपा जय जय जय जय जगदम्बे माँ ॥ ३ ॥ करि करुणा राखौ लज्जा करुणा करो देवी माँ करुणा करो देवी आरती दुर्गा देवी आरती दुर्गा देवी त्रिभुवन जगदम्बे माँ जय जय जय जय जगदम्बे माँ ॥ ४ ॥ जय जय जय जय जगदम्बे माँ जय जय जय जय जगदम्बे आरती गिरिजा देवी आरती गिरिजा देवी त्रिभुवन जगदम्बे माँ जय जय जय जय जगदम्बे माँ ॥ ५ ॥

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

# * पुष्पाञ्जली *

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते हनाकम्महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १ ॥ यो देवेभ्य आतपति यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥ २ ॥ श्रीश्चते लक्ष्मीश्चपत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणा मुम्म इषाण सर्वलोकम्म इषाण ॥३॥ अम्बे अम्बिकेम्बालिके नमा नयति कश्चन । स सस्त्यश्वकः सुभद्रिकां कांपीलवासिनीम् ॥ ४ ॥ विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो वाहुरुत विश्वतस्पात् । संवाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन्देवऽएकः ॥५॥ नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुवाहवे । सहस्रनाम्ने पुरुषाय शास्वते सहस्रकोटीयुगधारिणे नमः ॥ ६ ॥ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ ७ ॥ वासना वासुदेव स्य वासितं भुवनत्रयम् । सर्वभूतनिवासीन वासुदेव नमोऽस्तु ते ॥ ८ ॥ नमः कमलनाभाय नमस्ते जलशायिने । नमस्ते केशवानन्त वासुदेव नमोऽस्तु ते ॥ ९ ॥ नमः पंकजनाभाय नमः पंकजमालिने । नमः पंकजनेत्राय नमस्ते पंकजात्मने ॥ १० ॥ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् । लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं वन्दे विष्णु भवभयहरं सर्व-

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

लोकैकनाथम् ॥ ११ ॥ संचिन्तयेद्भगवतश्चरणारविन्दं वज्रांकुशध्वजसरोरुहलाञ्छनाढ्यम् ॥ उत्तुङ्गरक्तविलसन्नखचक्रवालं ज्योत्स्नाभिराहतमहद् हृदयान्धकारम् ॥१२॥ नमामि नारायण-पादपंकजं करोमि नारायणपूजनं सदा। भजामि नारायणनाम निर्मलं स्मरामि नारायणतत्त्व-मव्ययम् ॥ १३॥ गोविन्द नौमि गरुडध्वज नौमि नौमि श्रीकान्त नौमि पुरुषोत्तम नौमि नौमि तुभ्यं नमो मृदुपदे पद्मपाङ्गजाय ॥ १४ ॥ जय जय रहारि माँ जगदम्ब दया करिये हारिये न हिम्मत विसारिये न माई को नाम॥ १५ ॥

# * स्तुति *

जा विध राखे माई ता विध रहिये तु मेरी माँ, तू मेरी अम्बे ना कर विलम्बे सन्तन के भण्डार भरोरी माँ॥ सन्तन प्रतिपालि करै खुसियाली माई जय काली कल्याण करोरी माँ, पान सुपारी ध्वजा नारियल पान सुपारी ध्वजा नारियल ले देवा तेरे भेट धरोरी माँ॥ रतन सिंहासन बैठी मेरी मैया रतन सिंहासन बैठी मेरी मैया सिर कञ्चन के

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

छत्र धरोरी माँ ॥ ब्रह्मा विष्णु शेष मुनि नारद ब्रह्मा विष्णु शेष मुनि नारद ऐसे तेरे द्वार खड़ोरी माँ ॥ जहाँ जहाँ भीड़ परी है सन्तन पर जहाँ जहाँ भीड़ परी है सन्तन पर तहाँ तहाँ कारज सिद्ध करोरी माँ ॥ सन्तन प्रतिपाली करै खुसियाली माई जय काली कल्याण करोरी माँ तू मेरी देवा सुनो मेरी सेवा है माँ तू मेरी देवा सुनो मेरो सेवा ॥ हाथ जोड़ अम्बे तेरे द्वार खड़ोरी माँ ॥ चरण कमल को लिहो आसरा हे अम्बे चरण कमल को लिहो आसरा हे देवा चरण कमल को लिहो आसरा शरण तुम्हारी आन पड़ोरी माँ ॥ तू मेरी अम्बे ना कर विलम्बे सन्तन के भण्डार भरोरी माँ ॥ भण्डार भरपूर काल कंटक दूर ढ़क परदे रख लाज न रख किसी की मुहताज अपने चरण में लगाये रहो माँ ॥

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

पं० कैलासनाथ भार्गव द्वारा, भार्गव भूषण प्रेस, काशी में मुद्रित ।

छत्र धरोरी माँ ॥ ब्रह्मा विष्णु शेष मुनि नारद ब्रह्मा विष्णु शेष मुनि नारद ऐसे तेरे द्वार खड़ोरी माँ ॥ जहाँ जहाँ भीड़ परी है सन्तन पर जहाँ जहाँ भीड़ परी है सन्तन पर तहाँ तहाँ कारज सिद्ध करोरी माँ ॥ सन्तन प्रतिपाली करै खुसियाली माई जय काली कल्याण करोरी माँ तू मेरी देवा सुनो मेरी सेवा हे माँ तू मेरी देवा सुनो मेरी सेवा ॥ हाथ जोड़ अम्बे तेरे द्वार खड़ोरी माँ ॥ चरण कमल को लिहो आसरा हे अम्बे चरण कमल को लिहो आसरा हे देवा चरण कमल को लिहो आसरा शरण तुम्हारी आन पड़ोरी माँ ॥ तू मेरी अम्बे ना कर विलम्बे सन्तन के भण्डार भरोरी माँ ॥ भण्डार भरपूर काल कंटक दूर ढ़क परदे रख लाज न रख किसी की मुहताज अपने चरण में लगाये रहो माँ ॥

पं० कैलाशनाथ भार्गव द्वारा, भार्गव भूषण प्रेस, काशी में मुद्रित ।

CC-0. Arutsakthi R. Nagarajan Collection, New Delhi. Digitized by eGangotri

छपकर तैयार हो गया ! छपकर तैयार हो गया !! छपकर तैयार हो गया !!!

## गुटका दर्शनीय ( सम्पूर्ण )

इस संसार में गीता ऐसा पवित्र लोक-प्रिय ग्रन्थ न मालूम कहाँ-कहाँ से और किस रंग-ढंग से सजकर निकला होगा तथापि अबतक उपरोक्त साइज़ एवं सजधज में छपकर प्रकाशित होने का अभाव ही पाया गया। इसलिये मेरा पूर्ण विश्वास है कि यदि एक प्रति नमूनार्थ भी मँगाकर आप उक्त गीता को देखेंगे तो स्वयं कहेंगे कि यह दर्शनीय गीता, गीता-क्षेत्र में वन्दनीय, सराहनीय, होते हुए दर्शन करने योग्य भी है। सर्वोपकारार्थ मूल्य भी लागत मात्र केवल ।≈) रक्खा गया है। डाँक व्यय अलग से ।) लगेगा।

पुस्तक मिलने का पता—भार्गव पुस्तकालय, गायघाट, बनारस।

CC-0. Mutsaddi R. Nagarajan Collection, New Delhi. Digitized by eGangotri